# धनञ्जयविजयः।



व्यायोगः।

नान्दी।

हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः।
हेमाद्रिकलशा यत्र धात्री च्छत्रश्रियं दधौ [१]॥

---

स्मरामि परमेष्ठानं सच्चिदानन्दविग्रहम्
चिन्तितो यो हृदा भक्त्या संसारार्णवतारकः।
जिज्ञासूनां प्रबोधाय श्रीतारानाथशर्मणा
विषमाणि पदानीह व्याख्यायन्ते प्रयत्नतः॥

[१] लीलावराहस्य स्वेच्छामात्रेण धृतवराहमूर्त्तेर्हरेः। दंष्ट्रैव दण्डः। यत्र दंष्ट्रारूपदण्डे वर्त्तमानेति शेषः। हेमाद्रिः स्वर्णमयगिरिः सुमेरुः स कलस इव यस्याः सा धात्री धरा छत्रश्रियं छत्रशोभां, दण्डोपरि धृतत्वेन, स्वर्णकलसाकारमण्डनविशेषवत्त्वेन च धरायाश्छत्रशोभावत्त्वम् तथा च सुमेरुसहिताया धराया अपि साकारैकदेशदंष्ट्रामात्रेण धारणात् हरेः प्राशस्त्यं व्यज्यते।

अपिच।

तद्वः प्रमार्ष्टु विपदः प्रणतार्त्तिहन्त्री
न्यस्तं पदं महिषमूर्द्धनि चण्डिकायाः।
वैरी यदीयनखरांशुपरीतशृङ्गः [१]
शक्रायुधाङ्कितनवाम्बुधरप्रभोऽभूत्॥

अपिच।

तद्वः सारस्वतं चक्षुः समुन्मीलतु सर्वदा।
यत्र सिद्धाञ्जनयन्ते [२] गुरुपादाब्जरेणवः॥

---

[१] वैरी महिषः। यदीयं यस्य पदस्य सम्बन्धि, नखोऽस्त्यस्य कुञ्जादित्वात् रः नखरमङ्गुष्ठं "किञ्चिदूर्द्धं तथा वाममङ्गुष्ठं महिषोपरीति तद्ध्यानवाक्ये महिषमूर्द्धनि अङ्गुष्ठार्पणस्यैव प्रतीतेः तस्यांशुभिः अथ च नखरः शीतः भक्तानां तापनिवारकत्वात् योऽंशुरित्यपि ध्वन्यते, परीतशृङ्गः अनेनाङ्गुष्ठस्य आरुण्यं गम्यते अरुणकिरणसंसर्गादेव मेघे शक्रायुधस्योद्भवात्। एतद्विशेषणेन देवानामपि दुर्जयमहिषासुरस्याङ्गुष्ठमात्रेणाक्रान्त्या हननात्तस्या विपन्निवारणमकिञ्चित्करमिति सूचितम्। महिषस्य स्वतः कृष्णत्वात् मेघसादृश्यम्, शृङ्गस्य धनुराकृतित्वात् अरुणाङ्गुष्ठकिरणसम्पर्काच्च शक्रायुधसादृश्यम्।

[२] सरस्वत्या इदं सरस्वतीप्रसादलब्धं चक्षुः शास्त्रज्ञानम्। सिद्धाञ्जनं योगशास्त्रप्रसिद्धः अञ्जनविशेषः यत्सेवनात् भूतभविष्यद्वर्त्तमानं लोकत्रयगतस्थ वस्तु प्रत्यक्षं भवति, तदिवाचरन्तीति क्यङ्।

[नान्द्यन्ते सूत्रधारः [१] ॥]

[सूत्र। समन्तादवलोक्य।] अहो रमणीयता प्रभातस्य!

तथाहि।

दाराणां सुरवैरिणो रतिपतेर्मातुस्त्रिलोकीजितः
स्फारत्पङ्कजकोटरोदरजुषो निद्राविरामे श्रियः।
प्रत्युद्बुद्धमरालपक्षपटहध्वानप्रबन्धानुगं
भृङ्गी मङ्गलगायिकेव सततं प्रोत्कूजति प्राङ्गणे [२]॥

[पुनः परितोऽवलोक्य।] अहो रमणीयः शरदारम्भः। यतः।

शरो हरति मे चेतः प्रोन्मूर्च्छत्पद्मकुड्मलम्। अपि च।

निष्कम्पा पृथिवी प्रशान्तजलता, निर्दुर्दिनं चाम्बरं
सुव्यक्तामलतारकेन्दु, सरितः काशप्रसूनाङ्किताः।
तोयं वीतविषं,[३] सरांसि विकसत्पद्मानि, शुभ्रा दिशो,
दृष्ट्वं सम्प्रदि शारदीं श्रियमिमां मन्ये प्रबुद्धो हरिः॥

---

[१] सूत्रधारो वदतीति शेषः एवं सर्वत्र।

[२] सुरवैरिणो हरेर्दाराणां वनितायाः त्रिलोकीजितोरतिपतेर्मातुर्जनन्याः। स्फारतां प्रकाशमानतामुपगच्छतां पङ्कजानां कोटरमिवोदरं मध्यं तज्जुषः सेवमानायाः श्रियः प्राङ्गणे निद्राविरामे निमित्तार्थे सप्तमी तदर्थमित्यर्थः। मरालो हंसस्तस्य पक्ष एव पटहः वाद्यभेदस्तस्य शब्दसमुदयानुगं यथा तथा भृङ्गी मङ्गलगायिकेव कूजति।

[३] वीतविषम् विगतकालुष्यम्।

[नेपथ्याभिमुखमवलोक्य] कएष लिखितहस्तः समायाति ?

[ततः प्रविश्य पुरुषो लिखितमर्पयति]

[सूत्रधारः विमृश्य वाचयति ।]

"अस्ति प्रशस्तिसहितः [१] श्रीमान् जयदेवः ।
अर्थिप्रत्यर्थिलक्षेष्वप्यपराङ्मुखचेतसम् [२] ।
यं पराङ्मुखतां निन्युः केवलं परयोषितः ॥
यस्य चेतसि निर्व्याजं द्रव्यं तूलकणायते ॥
क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः ॥
स च प्रसादेन रङ्गमण्डनं नाम नटं समादिशति ।
"इह शरदि विराजद्धारिजोत्तंसितायां
प्रथमविगतनिद्रः श्रीकराश्लिष्टवक्षाः ।
शिथिलयति मुरारिर्योगनिद्रानुरागं
तदयमखिललोकस्योत्सवः किं पुनर्नः ? ॥

तदिदानीं भवता वीरसाङ्कं रूपकम् अभिनीय गदाधरप्रमुखास्मत्परिषदानन्दनीयेति ।" किं नाम तादृशं रूपकम् ? । [स्मृत्वा] आः ज्ञातम् ।

---

[१] प्रशस्तिः प्रशंसा ।

[२] अर्थिनः याचकाः कार्य्यनिवेदका वा प्रत्यर्थिनो वैरिणः कार्य्यनिवेदकप्रतिपक्षा वा तेषां लक्षेषु अपराङ्मुखचित्तमपीत्यर्थः ।

कुलं कविमुनेरस्ति पुरान् यत्र सरस्वती।
संशिक्षयति धात्रीव नितान्तं मधुरां गिरम्॥
तत्राभवदुपाध्यायो नारायणसमाह्वयः।
जितवादिसहस्रौघः प्राप वादीश्वराभिधाम्॥

अपि च। कृतसंन्यसनात्[१] प्रयच्छतो-
ऽप्यभयं भूतगणाय योगिनः।
निजमण्डलभेदशङ्किनो
भयमेकस्य रवेरभूद्यतः॥

तत्सूनुः काञ्चनो नाम समस्तगुणवल्लभः।
गोष्ठीशालेव[२] विद्यानां यस्य जिह्वा विराजते॥

तेन कृतो धनञ्जयविजयो[३] नाम व्यायोगोऽभिनेतव्यः।

[नेपथ्याभिमुखमवलोक्य।] कः कोऽत्र भोः?

---

[१] कृतसंन्यसनात् कृतसर्वविहितकर्मत्यागात्, भूतगणेषु अभयं प्रच्छतः ददतोऽपि यतः यस्मात् सकाशात् रवेः भयमभूत्। किं तद्भयम्? इत्यपेक्षायां विशिनष्टि निजमण्डलेत्यादि। योगिनो हि सूर्यमण्डलं भित्त्वा ब्रह्मलोकं गच्छन्तीत्यागमप्रसिद्धम्।

[२] गोष्ठीशाला सभास्थलम्।

[३] धनञ्जयस्य विजयमधिकृत्य कृत इत्यर्थे तदधिकृत्य कृते ग्रन्थे इत्यण् तस्याख्यायिकायां वा लुक् तद्धितलुकि प्रकृतिवद्भाव मिति बोध्यम्। व्यायोगो रूपकरूपनाटकभेदः।

[प्रविश्य पारिपार्श्विकः] भाव ! को नियोगो [१]।

[सूत्रधारः।] आज्ञाप्यतां धनञ्जयविजयाभिनयकुशलो नटवर्गः।

[पारिपार्श्विकः।] तथा। [इत्युक्त्वा निष्क्रान्तः।]

[सूत्रधारः। प्राचीमवलोक्य स्मित्वा]

चिरमज्ञातः समयवशात् कोऽपि तेजसो निचयः।
प्रकटीभवति विवस्वानेष किरीटीव समयमुत्तीर्णः [२]॥

[ततः प्रविशति विराटामात्येन सहार्जुनः।]

[अर्जुनः। सोत्साहम्] अनुकूलं दैवं लक्ष्यते।

यतः। या लतान्विष्यते सैव लग्ना सम्प्रति पादयोः।
कुरुराजोऽभियातव्यः स्वयमेव समागतः।

[सूत्रधारः। सहर्षमवलोक्य।] अये परिगृहीतार्जुनवेषः श्यामलकः प्रवृत्तस्तदहं पात्रान्तराणि प्रगुणयामि।

(इति निष्क्रान्तः प्रस्तावना)

[१] को नियोगः इति स० कथ्यतामिति शेषः।

[२] समयवशात् कालवशात् प्रतिज्ञावशाच्च चिरमज्ञातः अदृश्यः। समयं रात्रिकालं प्रतिज्ञातकालञ्च।

[नायकः। सहर्षम्।]

गोरक्षणं सकलबान्धवमानभङ्ग-
क्षोभो विराटनृपतेरुपकारिणश्च।
पर्य्याप्तमेकमपि [१] यत् समरोत्सवाय
सर्वं तथा मिलितमत्र ममैव भाग्यैः॥

अपि च। सा मनोरथसम्पत्तिः स एव हि महोत्सवः।
निर्वापयन्ति यद्वैरं परिपन्थिषु मानिनः॥

[अमात्यः।] देव! नेयं संग्रामस्य भूमिः [२]।

निर्दग्धकालकेयस्य निवातकवचद्विषः [३]।
कौरवास्ते कियन्मात्रं रणाराधितधूर्जटिनः॥

[नायकः।] साधु सुयोधन! साधु!

यत् पूर्ब्बजैरधिगतं भुजविक्रमेण
तत् प्राप्य राज्यमखिलं कपटाक्षद्यूतात् [४]।
गाः साम्प्रतं हरसि भिल्ल इव त्वयाद्य
सापत्रपः कुलगुरुर्विहितो विधुर्नः॥

---

[१] एकमपि एतेषां गोरक्षणादीनामेकैकमपि पर्य्याप्तं समर्थम् अत्र विषये तत् तद्वृन्दमेव मिलितम्।

[२] नेयं तव योग्येति शेषः।

[३] कालकेयनिवातकवचादयोऽसुरभेदाः।

[४] कपटद्यूतव्यवहारेण भिल्लः म्लेच्छभेदः।

[अमात्यः ।] देव! सुयोधनचरित्रेण शशिनोऽवनतं शिरः ।
चरित्राणि तवैवाद्य कुर्वन्तु परमोन्नतम् ।

[नायकः । विचिन्त्य,] कथमयं नगरसमीपे क्षिप्रसमरोपकरणानयनाय प्रहितः, प्रतिपन्नसारथ्यश्चिरयति कुमारः ?

[ततः प्रविशति विराटकुमारः ।]

[कुमारः ।] देव ! अनुष्ठितस्त्वदादेशस्तदारोहत्वायुष्मान्

[नायकः । कृतसन्नाहो रथमारोहति]

[अमात्यः सविस्मयं नायकमवलोक्य ।]

विरचितसमरोचिताङ्गभूषः
परिहितभूषितवेष एष भाति ।
जलधरनिकरोपरोधशून्यो
रविरिव राजसुतः शरत्प्रचण्डः ॥

[पुनर्निपुणमवलोक्य ।]

ह्रेषन्ते यज्जितजलधरध्वानमेते तुरङ्गा
भूमिं पादैर्यदपि च मुहुर्दक्षिणैरालिखन्ति ।
यानौत्सुक्यं यदपि चलनाद्बालधेर्व्यञ्जयन्ति
त्वद्दोर्दण्डह्रितयवशगा तत् समग्रा जयश्रीः ॥

[नायकः ।] अमात्य ! वयमिदानीं गाः प्रत्यानेतुं प्रस्थिताः स्मः, त्वं गोहरणोद्विग्नं पौरजनं समाश्वासय ।

[अमात्यः ।] यदादिशति देवस्तथा करोमि [इति निष्क्रान्तः]

[नायकः । कुमारं प्रति ।] यावत्त्वा गमन् दूरे गावस्ता-वन्नोदयाश्वान् ।

[कुमारस्तथा करोति]

[नायकः । रथवेगं निरूप्य]

आलिङ्गन्तो वसुधां निजखुरदलितामिवानुनेतुममी ।
वदनविगतचरणा इव मंलक्ष्यन्ते अवादश्वाः ॥

अपि च ।

विच्छिन्ना रथचक्रपद्धतिरियं हेलाप्लुतैर्वाजिना—
मायान्तीव जवेन सम्मुखममी मार्गस्थिताः शाखिनः ।
खेदं पादतलाहतेरिव पुरो गन्तुं गतो नेहते [१]
वाहानामनुकूलमारुतभरोद्धूतोऽपि धूलिव्रजः ॥

[नेपथ्याभिमुखदवलोक्य ।] रेरे गोपाला ! अलं विषादेन !
तथाहि ।

सिञ्चन्तः करुणारसेन हृदयं यावन्न वत्सा अमी
मातुर्मार्गविलोकनव्यसनिनो मुञ्चन्ति हम्बारवान् ।
याचन्ते नहि यावदेव शिशवः पातुं पयो नोत्सुका-
स्तावद्गाव इहेत्यवेत भवतां चेतोज्वरः शाम्यतु ॥

[१] पादतलाघातादिव खेदं गतः सन् पुरो गन्तुं नेहते इत्यन्वयः ।

[नेपथ्ये महाप्रसाद्यो [१]।]

[कुमारः।] आयुष्मन्नूनमदूरे कुरुबलम्। यतः।

वाजिव्राजखुराभिघातदलितक्षौणीरजोभिः पुरः
सान्द्रैर्जीर्णकपोतकण्ठरुचिभिर्व्योमेदमास्तीर्य्यते।
किं वाक्येन करीन्द्रगण्डविगलद्दानाम्बुधारागणा-
भोगं संप्रथयन्त्यमी परिमलप्रोद्गारिमन्दानिलाः॥

[नायकः।] सुव्यक्तं कुरुबलम्।

तथाहि। व्याधूतचामरमुदस्तसितातपत्र-
मुत्क्षिप्तकुन्तभयविद्रुतपक्षिचक्रम् [२]।
एतद्बलं कुरुपतेर्भरपूर्य्यमाण-
शङ्खध्वनित्रसदरण्यमृगं पुरस्तात्॥

[बाहू प्रति सोत्साहम्।]

कान्तारक्षितिषूपधानविषये [३] यद्धूलिभिर्धूसरौ
पाञ्चालीपरिरम्भनिर्भररसास्वादेऽपि यद्दक्षितौ।
यत् कान्ताजनयोग्यदन्तवलयैरावेष्टितौ निस्त्रपं
तद् बाहू! स्मरतं चिराय पुरतस्तिष्ठन्त्यमी वैरिणः॥

[१] महाप्रसादः। स०।

[२] पक्षिचक्रं पक्षिसमूहः भरेण वेगेन पूर्य्यमाणः।

[३] उपधानं शिरोवस्थापनोचितपदार्थविशेषः (बालिश)।

[नेपथ्ये।]

शतधनुरिव दर्पः साहसस्येव मूर्त्तिः
स पटुरिव [१] रसोऽयं विग्रही वीरनामा।
दधदिव जयलक्ष्मीं सन्निधौ चापवल्ली—
मगणितकुरुराजः कोऽयमेकोऽभ्युपैति ?॥

[उभौ शृणुतः।]

[कुमारः।] आयुष्मन्! कस्येदमुदारं वचनम्?

[नायकः।] अस्मत्प्रथमगुरोः शारद्वतस्य।

[पुनर्नेपथ्ये।]

द्वन्द्वाहवाराधितशूलपाणिः
स पाण्डवः खाण्डव[२]तर्पिताग्निः।
ज्याघातजातः किणसन्निवेशः
करद्वये यस्य परस्य पुंसः॥

अपिच। गलितनिखिलशस्त्रं वाङ्मात्रावशेषं
द्विगुणिततररागं यं निरीक्ष्य स्मरारिः।

[१] विग्रही मूर्त्तिमानिव अतएव पटुः कार्य्यसमर्थः।

[२] खाण्डवनामवनदाहनेन सन्तोषित वह्निः। तदुत्कीर्त्तनेन चास्य सेन्द्रदेवतादिजयकर्त्तृत्वं स्मर्य्यते।

विहितकपटरूपः साहसाक्रष्टचेता [१]
नयनसभिललाटं दर्शयामास सद्यः॥

व्यक्त एवायमर्जुनः। तथाहि

हेलोल्लङ्घितवारिधिर्जनकजाविश्लेषशुष्यन्मनः—
कौशल्यासुतदैन्यपानसुपटुर्ग्रस्तांशुमन्मण्डलः [२]।
निर्दग्धाखिलराक्षसेश्वरपुरः सौमित्रिसंजीवन
प्रोत्खातौषधिपर्वतोऽस्य मरुतः पुत्रो ध्वजो वर्त्तते॥

[उभौ प्रणुतः।]

[कुमारः।] आयुष्मन्!

कृतवीररसोद्रेकैः तैर्दर्भीगर्भितैः पदैः।
त्वयि पुत्र इवात्यर्थं पक्षपातं व्यनक्ति कः?

[नायकः।] कुमार! किमित्युच्यते पुत्र इवेति ननु पुत्र एवाहमाचार्य्यस्य।

[नेपथ्ये।]

तूर्णं कर्ण! धनुर्गृहाण समरे शारद्वतस्त्वग्रणी-
र्भारद्वाज! भृगूद्वहादधिगतान्यस्त्राणि संशिक्षय [३]।

[१] मायया कृतकिरातवेशः साहसमुत्साहस्तेन हृतचित्तः।

[२] जातमात्र एव हनूमान् सूर्य्यविम्बं विम्बफलं मत्वा ग्रसितुमुपचक्रामेति पुराणप्रसिद्धम्।

[३] संशिक्षय अनुशीलय स्मरेत्यर्थात्।

द्रौणे ! नन्दय कौरवक्षितिपतिं पुत्रस्तथा शान्तनोः
संधत्से समरोचितं पुररिपोः शिष्योऽयमास्तेऽग्रतः ॥

[नायकः। सानन्दम्] सोऽयं कुरुराजः सेनायां सन्नाहयति[१] योधान्।

[कुमारः।] देव! सारथिना परबलयोधाः स्वरूपतो वीर्य्यतश्च ज्ञातव्याः।

[नायकः।] पश्यैनं भुजग[२]ध्वजावेदितकौटिल्यम्।

यस्येन्दुवंशकलहप्रथमाङ्कुरस्य
सौजन्यगन्धमपि यस्य न वेत्ति चेतः ॥
आ जन्मनो विषजलाग्निमुखैरुपायै-
रस्मन्निकार[३]निरतः कुरुराज एषः ॥

[कुमारः।] कोऽयं ततो दक्षिणतः ?।

[१] सन्नाहयति युद्धार्थमुद्योजयति।

[२] भुजगाकारोध्वजस्तेनवावेदितं कौटिल्यं यस्य।

[३] इन्दुवंशश्चन्द्रवंशस्तत्रत्यानामित्यर्थः कलहस्य परस्परं विरोधस्य प्रथमाङ्कुरस्य आद्यवीजप्ररोहस्वरूपस्य यस्य दुर्य्योधनस्य चेतः सौजन्यगन्धम् सुजनतालेशमपि न वेत्ति। अस्माकं निकारः दुःखोत्पादनम् तत्र निरतः आसक्तः।

[नायकः। साश्चर्य्यम्।]

रोषोत्कर्षकषायितोल्बणदृशोऽप्यग्रे हिड़िम्बद्विषः
पाञ्चालीहृदयस्थलात् सरभसं लज्जादुकूलाञ्चलः।
निर्म्मोकः फणिनस्तनोरिव बलाद्येनावकृष्टः पुरा
सोऽयं साहसिकाग्रणीस्तनुरथे दृशामनस्तिष्ठति [१]॥

[कुमारः।] किमतः परं साहसम्?।

[नायकः।] इतः पश्य। [सप्रणामम्]

प्रतिफलितरविप्रभावितानः
स्फुरदुरुकाञ्चनवेदिसूचितेज्यः [२]।
दधदुपनिषदः श्रियं समग्रां
प्रथितयशा गुरुरेष कौरवाणाम्॥

[कुमारः।] महानुभावः खल्वेष लक्ष्यते।

---

[१] रोषोत्कर्षेण क्रोधातिशयेन कषायिते रक्ते उल्बणे उत्कटे दृशौ नेत्रे यस्य हिड़िम्बद्विषः हिड़िम्बराक्षसहन्तुरपि भीमस्याग्रे सरभसं सबलात्कारम्। तनुरथे स्वल्पप्रमाणरथे तिष्ठति।

[२] स्फुरन्त्या दीप्तया उर्व्या महत्या काञ्चनवेद्या सूचिता इज्या सम्मानना यस्य। प्रतिफलिता काञ्चनवेद्यां प्रतिविम्बिता या रवि-प्रभा सैव वितानमुल्लोचमिव यस्य तादृशम्। उपनिषदः अस्त्रविद्या-रहस्यस्य श्रियं दधत् धारयन्। एषः कौरवाणां गुरुः शिक्षयिता द्रोणाचार्य्यः।

[नायकः ।] इतः पश्य ।

योऽयं ललाटतटमण्डितचण्डचूड़ः
संलक्ष्यते स्वयमिव त्रिपुरप्रमाथी [१]।
मूर्त्तोऽस्त्रवेद इव दुर्विषहः परेषां
पुत्रो गुरोः पुनरयं दयितः सखा मे ॥

[कुमारः ।] पुनरावेदय ।

[नायकः ।]

येनोच्चैर्ध्वजमिषतः कलस इवारोपितो धनुर्वेदः।
कनककमण्डलुमण्डितरथवंशो भाति गुरुरेषः [२]।

[कुमारः ।] कोऽयं कुरुराजसन्निधौ समरार्थीव दृश्यते ? ।

[नायकः सामर्षम् ।]

मूलं सुयोधनकृताखिलदुर्नयानां
यद्दोर्बलं, भृगुकुलोद्वहगूढ़शिष्यः ।

[१] चण्डा उग्रा चूड़ा शिरस्यजटाभेदः। स्वयं त्रिपुरप्रमाथी शिव इव दुर्विषहः सोढ़ुमशक्यः अनिवार्य्य इत्यर्थः गुरोः द्रोणस्य पुत्रः अश्वत्थामा ।

[२] एष कृपाचार्य्यः तस्य कनककमण्डलुयुक्तध्वजत्वं भारते प्रसिद्धम् ।

सोऽयं प्रसन्नबलसूदनदत्तशक्तिः
सुतात्मजो निजकुलानुचिताभिमानः [१] ॥

[कुमारः। सोपहासम्] नन्वेष घोषयात्रायां विदितप्रभावः [२]। क एष ध्वजः।

[नायकः। सप्रणामम्।]

अन्याङ्गनापरिहृतिप्रणयेन कीर्त्त्या-
वालिङ्गितो धवलया पलितच्छलेन।
द्वन्द्वाहवप्रकटनिर्जितजामदग्न्यो
देवव्रतः पृथुयशाः स पितामहो नः [३] ॥

[१] भृगुकुलोद्वहस्य जामदग्न्यस्य गुरुशिष्यः आत्मनः क्षत्रियत्वमपह्नवानेन ब्राह्मणत्वं प्रख्याप्य ततोऽस्त्रविद्या कर्णेनासादितेति भारतप्रसिद्धम्। प्रसन्नेन स्वदेहोत्कर्त्तनेनापि सहजकवचकुण्डलस्य दानेन परितुष्टेन बलसूदनेन इन्द्रेण दत्ता शक्तिः एकपुरुषघातिनी अस्त्रविशेषो यस्मै। तत्कथा च वनपर्वणि ३०९ अध्याये।

[२] सूतपुत्रं जिघांसन्तः समन्तात् पर्य्यवाकिरन्।
अन्येऽस्य युगमच्छिन्दन् ध्वजमन्ये न्यपातयन्॥
इत्युपक्रम्य। ततो रथादवप्लुत्य सूतपुत्रोऽसिचर्मभृत्।
विकर्णरथमास्थाय मोक्षायाश्वानचोदयत्। म, भा, व, घो

[३] अन्यस्या अङ्गनायाः स्त्रियाः परिहारेण यावज्जीवं तस्य ब्रह्मचारित्वात् यः प्रणयः सापत्न्याभावेन प्रेमाधिक्यं तेनैव हेतुना,

सूत ! त्वरय त्वरय तुरगान्।

नेपथ्ये।

वैमानिका इमे व्योम्नि समरालोकनोत्सुकाः ॥

बाहुसारमिदानीं त्वं प्रदर्शय धनञ्जय ! ॥

ततः प्रविशति विद्याधरसहित इन्द्रः प्रतीहारी च।

[इन्द्रः। साश्चर्य्यम्।]

वाक्कलहोऽपि गहनो बहुभिर्बलिनो विहीनसामर्थ्यैः ॥

किमुतानेकैर्बलिभिः क्रूरास्त्रनिपातदारुणः समरः ॥

पुनः सविस्मयम्।

एको रथी प्रतिरथास्तु निरस्तसंख्याः

कर्णादयः सुचिरराज्यमदेन दृप्ताः।

वत्सस्तथाप्यहह निग्रहणं [१] प्रविष्टः

सत्त्वं हि नोर्जिततरं विमृशत्यपायम् ॥

कुमारः। [पुरोऽवलोक्य] देव ! कुरुपतिरेवागच्छति।

---

धवलया शुभ्रया कीर्त्त्येव पलितच्छलेन जरसा केशादि शोक्रग्रव्याजेन आलिङ्गितम्। द्वन्द्वाहवे द्वैरथे युद्धे प्रकटं सप्रकाशं निर्जितः जामदग्न्यो येन। तत्कथा च उद्योगपर्वणि अम्बोपाख्याने १८५ अध्याये।

[१] प्रतिकूलो रथो येषां प्रतियोद्धारः। निग्रहणं युद्धम्।

नायकः। पूर्णास्तर्हि मनोरथाः।

[ततः प्रविशति रथारूढ़ो दुर्य्योधनः]

दुर्य्योधनः। [नायकं विलोक्य सामर्षम्]

वनवासपरिक्लेशात् किं निर्विण्णोऽसि [१] जीवने।
यदभीरेक एव त्वमनेकैर्योद्धुमुद्यतः॥

नायकः। [सोपहासम्]

एको निवातकवचान् सह कालकेयै-
र्भस्मीचकार, भगिनीमहरच्च शौरेः।
एकेन खाण्डववनं जुहुतेऽनले च
पार्थस्य नाभिनव एष रणेषु पन्थाः [२]॥

दुर्य्योधनः। अलमेतैरुपहासैः। उपस्थितो निकषोपलोपमः संग्रामः।

नायकः। [सहासम्]

अपसर कुरुनाथ! द्यूतमन्यादृशं तद्-
द्रुपदनृपतिपुत्री यत्र दासीकृतासीत्।

[१] जीवने निर्विण्णः वैराग्यं प्राप्तः।

[२] अहमित्यनुक्त्वा पार्थत्वेनात्मनामकीर्त्तनं गर्वसूचनार्थम्। निवातकवचकालकेयादैत्यभेदाः तद्युद्धकथा च भारते वनपर्वणि १७२ अध्याये। शौरेः कृष्णस्य भगिनीम् सुभद्राम्।

इह हि शरशलाकापातपूर्वं [१] सगर्वं
प्रतिनृपतिशराचैः चत्रियद्यूतकेलिः ॥

दुर्य्योधनः। [सामर्षम्]

करिवदनवलयभूषितकरश्चिरत्यक्तकार्मुकाभ्यासः।
नर्त्तनशालां प्रविश प्रवीरपुरुषोचितो हि संग्रामः॥

कुमारः। [सोल्लुण्ठम्] आर्य्यैनं चिरपरित्यक्तकार्मुकाभ्याम इत्यभिधत्से तद्युक्तम्।

संक्रन्दनप्रहितखेचरवर्गबद्ध-[२]
युष्मत्कृपाकुलनिजाग्रजशासनेन।
भीमानुजेन विहिता शरपञ्जरश्री-[३]
र्नालोकिता हि भवता नृप! विह्वलेन॥

[१] शरा एव शलाका द्यूतसाधनवस्तुभेदास्तेषां पातपूर्वं चत्रियाणां द्यूतरूपः केलिः। प्रतिनृपतिशराद्यैः विरोधिनृपबाणरूपपाशकैः। अतएव तस्मादन्यादृशत्वमस्य द्यूतस्यातोऽपसरेत्यर्थः।

[२] प्रियदर्शी महाबाहो धार्त्तराष्ट्रो महाबलः।
गन्धर्वैर्ह्रियते राजा पार्थ! त्वमनुधावत॥
दुःशासनो दुर्विषहो दुर्मुखो दुर्ज्जयस्तथा।
बद्धा ह्रियन्ते गन्धर्वैराजदाराश्च सर्वशः।
इति महाभारते वनपर्वघोषयात्रापर्वणि।

[३] स तानुत्पतितान् दृष्ट्वा कुन्तीपुत्रो धनञ्जयः।

विद्याधरः। देव! प्रौढ़ः खल्वेष वत्सः।

इन्द्रः। राजपुत्रो ह्ययम्।

दुर्योधनः। सूत! अलं विप्रजनोचितवाक्कलहेन विषमेयं भूमिः, रथमञ्चारोचितां भत्रमवतराम।

नायकः। यदभिरुचितं कुरुपतये।

(इति निष्क्रान्तौ)

विद्याधरः। [नायकरथं निर्दिश्य] देव!

त्वन्नन्दनस्यन्दनवाजिराजिखुरचतक्षुण्णरजःपताकाः।

विपचवचोऽरणिमन्थनोत्थप्रतापवह्नेरिव धूमलेखाः [१]॥

इन्द्रः। भद्र! महाकविरसि।

विद्याधरः। देव! निकटगते किरीटिनि प्रवृत्तः कोलाहलः कुरूणाम्। तथाहि

महता शरजालेन समन्तात् पर्य्यवारयत्।

ते बद्धाः शरजालेन शकुन्ता इव पञ्जरे।

इति महाभारते वनपर्वघोषयात्रापर्वणि।

[१] विपचस्य शत्रोः वच एवारणिः अग्निमन्थसाधनकाष्ठभेदः तस्य मन्थनेन घर्षणेन उत्थस्य उत्थितस्य प्रतापवह्नेः धूमलेखाः धूमश्रेणय इव रजः पताका लक्ष्यन्ते इति शेषः।

हेषाघोषैर्हरीणां जितघननिनदैर्बृंहितैः कुञ्जराणां
ज्याघातोत्थैर्निनादैः पटुपटहरवैर्मर्द्दलोद्दामशब्दैः।
प्राप्तैः कर्णोपकण्ठं मदगजनिवहस्कन्धघण्टाप्रणादैः
शृङ्गाराय [१] त्वरन्ते त्रिदशमृगदृशो वीरवर्गानुरक्ताः॥

प्रती। देव! ण कोलाहलमेत्तं जम्मं बि पउत्तं, कुरुबलं पच्चहिआतस्स तुह उत्तस्स अहिमुहं प्रचलिदम्। देव! पेक्ख आकणाकड्टिअकठिणफग्गुणकोदण्डमुहणिस्सरन्तमरणिअरेहिं केवि खण्डिदगत्ताओ, केवि भग्गकोदण्डाओ, केवि पमुड्ढिदसीसकाओ, केवि णिभिण्णणेत्ताओ, केवि भग्गभुजाओ, केवि विक्खदवक्खत्थलाओ, कुरुबले भटा दीसन्ति [८]।

इन्द्रः। [सहर्षम्] कृतहस्तः खल्वेष वत्सः।

[१] कर्णोपकण्ठं श्रवणान्तिकं शृङ्गाराय नेपथ्यकरणाय।

देव! न कोलाहलमात्रं जन्यमपि (युद्धमपि) प्रवृत्तं, कुरुबलं प्रत्यभियातस्य तव पुत्रस्य अभिमुखं प्रचलितम्। देव! प्रेक्षस्व। आकर्णाकृष्ट-कठिन-फाल्गुन-कोदण्डमुखनिःसरच्छरनिकरैः कोऽपि खण्डितगात्राः, कोऽपि भग्नकोदण्डाः, कोऽपि प्रमोटितशीर्षकाः, कोऽपि निर्भिन्ननेत्राः, कोऽपि भग्नभुजाः, कोऽपि विक्षतवक्षःस्थलाः कुरुबले भटा दृश्यन्ते स०।

विद्याधरः। देव! पश्य पश्य।

मुञ्चद्भिर्मदवारि वारणगणैर्मेघायितं, कार्मुकै-
रेतैः शक्रशरासनायित,मधः क्षतैः शिलीन्ध्रायितम्।
खद्योतायितमस्त्रघट्टनसमुद्भूतस्फुलिङ्गैः, स्फुरन्-
नाराचैरशनायितं, रणभवा सैन्यैर्नभस्यायितम् [१]॥

अपि च। त्वत्पत्रमुक्तविशिखैरशनिप्रकाशै-
राम्लूनलूननवकेतककान्तदन्ताः।
त्रासावसन्नमदधारकपोलभागाः
सम्पादयन्ति करिणः करिणीभ्रमं नः [२]॥

इन्द्रः। [सतोषम्]

हरान्तेवासिनस्तस्य कार्त्तवीर्यान्तकस्य च।
यद्नाथमनाथस्य का श्लाघा कौरवैर्जितैः।

[१] मेघैरिवाचरितं सर्वत्र कर्त्तुरुपमानात् क्यचि भावे क्तः। नभस्यः भाद्रपदमासः।

[२] केतक्याः पुष्पं केतकं तदिव कान्ता शुभ्रत्वात् दन्ता येषाम् त्रासेनावसन्ना विलुप्ता मदधारा दानजलसन्ततिर्यैश्च तादृशाः कपोलभागो येषामतएव दन्तमदयोः राहित्यात् करिणीभ्रान्तिः।

प्रतीहारी। पेक्खद् देवो।

बाणप्पलूणमअवारणगेण्ठगेण्ठ
णाणासिराहिमुहदत्तगहीरतुण्डा।
एसा पणच्चिदकराङ्गुलि कण्ठदिद्धं
रत्तासअं पिबइ कावि पिसाअकणा [१]॥

विद्याधरः। देव! पश्य।

एते मत्तमतङ्गजाः प्रजविनः श्वासाकुलाधोरणाः
स्फूर्जच्चन्द्रिकबर्हभारकलितोद्दण्डध्वजश्रेणयः॥
कुप्यत्त्वत्करवज्रपातचकितप्रभ्रान्तपृथ्वीधर
व्यूहभ्रान्तिमुदञ्चयन्ति नितरां त्वत्पूर्वविद्राविताः [२]॥

[१] बाणप्रलून मदवारण ग्रन्थि ग्रन्थि
नानाशिराभिमुखदत्त गभीरतुण्डा।
एषा प्रनर्त्तितकराङ्गुलि कण्ठदिग्धम्
रक्तासवं पिबति कापि पिशाचकन्या स०॥

मदप्रधानोवारणः मदहस्ती ग्रन्थिग्रन्थी प्रतिसन्धिस्थानम्। तुण्डमाननम् प्रनर्त्तिताः कराङ्गुलयो यत्र तद्यथा तथा. कण्ठदिग्धं लिप्तकण्ठं रक्तं रुधिरमासवमिव तत् पिबति।

[२] श्वासाकुला गजानां प्रजवित्वात् श्वासव्यग्रा आधोरणाः हस्ति पका येषां चन्द्रकी मयूरस्तस्य बर्हः पुच्छस्य चन्द्रकं तद्भारेण कलिता

इन्द्रः। [सहर्षं पश्यति]

प्रतीहारी। देव! पेक्ख पेक्ख! णिरन्तरविक्खित्तबाणणिउरम्बपरिक्खदगअणरुहिरपाणमंतप्पिदाओ साहुवादोत्तरं जादुहाणजोइणीओ अहिणन्दन्ति तुह उत्तस्स विअअं [१]।

इन्द्रः। जय एव तर्हि, सत्याशिषस्ताः।

विद्याधरः। [विभाव्य] देव! महद्युद्धं वर्त्तते। पश्य पश्य।

वपुषि भटकरोटिन्यस्तकीलालसिन्धुं
द्विरदकरमृणालैर्योगिनीभिर्निपीय।
समरविजयिने यद्बाहुमुद्यम्य भूयः
प्रकटितपरितोषं स्वस्तिवादोऽभितेने [२]॥

युक्ता उद्दण्डा दीर्घवंशदण्डा ध्वजश्रेणयः येषाम्। उदञ्चयन्ति उत्थापयन्ति जनयन्तीत्यर्थः।

[१] देव! प्रेक्षस्व प्रेक्षस्व निरन्तरविक्षिप्तबाणनिकुरम्बपरिक्षतगजनररुधिरपानसंतर्पिताः साधुवादोत्तरं यातुधानयोगिन्यः अभिनन्दन्ति तव पुत्रस्य विजयम्। स०। यातुधानाराक्षसास्तत् सहिता योगिन्यः देवीगणभेदाः।

[२] भटानां करोटिः मस्तकास्थिभेदः। तत्र न्यस्तं कीलालं रुधिरं सिन्धुं बाहुल्यात् नदीं समुद्रमिव वा द्विरदानां करा मृणालानि श्वभ्रवत्त्वात् तैः निपीय। स्वस्तिवादः आशीर्वादवाक्यम्।

अपिच। भुग्नभ्रूयुगलैः क्रुधा समधिकस्फाराररुणाक्षैः चयात्
स्वेदाम्भःपटलप्रमृष्टतिलकैर्दष्टाधरोष्ठैरपि।
दृष्टश्मश्रुभिरुत्पतद्भिरभितः संकीर्णमालक्ष्यते
त्वत्पुत्रास्त्रनिकृत्तवैरिसुभटश्रेणीशिरोभिर्वियत् ॥

[पुनः सविस्मयमालोक्य] देव! पश्य।

कोऽप्येष खण्डितशिरा विकसन्मुखश्रीः
प्रारब्धताण्डवविधिः सुरकामिनीभिः।
आलोक्यते निजकराभिनयानुरूप-
व्यापारितेक्षणनिवेदितसत्त्वसारः [१] ॥

इन्द्रः। [सहर्षम्] किं किं पश्यामि दोलायितं मनः।

मायाविभिः कुरुबलैः सह युध्यमानं
कुन्तीसुतं रणशिरस्यसहायवीरम् ॥
तद्दर्शनीरवरणेषु तथाच नूनं
सापत्न्यसम्भ्रमकलिं सुरकामिनीनाम् [२] ॥

विद्याधरः। एवमेतत्। [अन्यतोऽवलोक्य] देव! पश्य पश्य

[१] सत्त्वसारः बलाधिक्यम्।

[२] सपत्न्या भावस्तत्र सम्भ्रमेण अहमेवास्य उपभोग्या भवेयं नान्येति जातसम्भ्रमेण यः कलिः कलहः तञ्च। एतयोर्मध्ये किं किं पश्यामीति गद्यस्थेन किं पदेन प्रक्षिप्तं कर्मविशेषितम्।

दूरात् प्रोत्साय्यमाणपरशरनिकरज्वालकीलाभिघात
प्रभ्रश्यद्वाजिवर्गभ्रमण नियमनव्याकुलव्रघ्नसूतः।
लेढि पौढ़ो हुताशः कृतलयसमयाशङ्कमाकाशवीथिं
गङ्गासूनुप्रमुक्तप्रथितहुतवहास्त्रानुभावप्रसूतः [१]॥

प्रतीहारी। देव! अह्माणं वि णिअडवत्ती भआणओ एसो हुदासणो।

विद्याधरः। भद्रे! मा भैषीः किं नामेदं किरीटिनः। पश्य पश्य।

नीलैः कालाञ्जननिभतमःस्तोमलिप्तान्तरिक्षै-
र्विद्युद्दामद्युतिधवलिताशेषदिक्चक्रवालैः॥
धीरध्वानैः कलभकनिभैः स्थूलधाराः सृजद्भि—
र्मेघैर्नीतः प्रलयमनलो वारुणास्त्रप्रसूतैः॥

इन्द्रः। महानुभावः खल्वेष वत्सः।

[प्रतीहारी।] देव सम्पदं राहासुदेण भुजङ्गमत्थं पउत्तं आलोलजीहजुअलकरालमुहणीसरन्तगरलधूमलेहाकरम्बिद फणारअणकिरणमालाविडम्बिदसुरकोअण्डाओ विहलि-

[१] प्रौढ़ः उद्दीप्तः। गङ्गासूनुर्भीष्मः हुतवहास्त्रम् आग्नेयास्त्रं तस्यानुभावः प्रभावस्तेन प्रसूतः जातः हुताशः वह्निः आकाशवीथिं गगनपथम् लेढि ज्वालया स्पृशति।

दमअलपुहवीवलआओ पेच्छणमेत्तदग्धमहामहीरुहाओ अपसरन्ति सप्पाओ। [१]

विद्याधरः।

दीर्घैः मज्जनशङ्खवत्मुकुलितैश्छिन्नैः खलानामिव
व्याप्तैर्योगिजनैरिवाम्बरतलव्याप्तैर्लसत्स्वस्तिकैः।
रत्नोद्गामिकरोज्ज्वलैर्नृपतिवत् स्वर्गस्थवद्भोगिभिः
राधेयास्त्रभुजङ्गमास्त्रजनितैर्दिक्चक्रमाक्रम्यते [२]।

इन्द्रः। खाण्डवदाहे कृतवैराः किं दशन्ति सर्पाः॥

विद्याधरः। अलं विषादेन अर्ज्जुनेन प्रयुक्तं गारुडमस्त्रम्। पश्य पश्य।

पदाघातनिपातमारुतभरात् प्रोत्क्षिप्तपृथ्वीधरा-
स्त्रस्यद्दष्टविशालभोगभुजगाः सूर्य्योपकण्ठस्पृशः।

[१] देव! साम्प्रतं राधासुतेन भुजङ्गमास्त्रं प्रयुक्तम्, आलोलजिह्वायुगलकरालमुखनिःसरद्गरलधूमलेखा करम्बितफणारत्नकिरणमालाविडम्बितसुरकोदण्डाः विष्फुलितसकलपृथिवीवलयाः प्रेक्षणमात्रदग्धमहामहीरुहाः अपसरन्ति सर्पाः। स०

[२] स्वस्तिकमासनभेदः कुण्डल्याकारेण मण्डलाधिष्ठानञ्च। अम्बरतलं व्याप्तं यैः निष्ठान्तस्य परनिपातः। योगिजनैर्योगसिद्ध्या लाघवप्राप्त्याम्बरगमनं योगशास्त्रप्रसिद्धम्। सर्पदेहः सुखादिभोगश्च भोगः तद्वद्भिः।

सन्तोषं जनयन्त्यमी कुलगुरोस्तीव्रणास्तथा सारथे-
र्मन्ये वैरिनृपप्रमाथविकसद्विक्रान्तयः पत्त्रिणः [१]॥

इन्द्रः। [सहर्षम्] ततस्ततः।

प्रतीहारी। एसो सम्पदं दुज्जोधणभच्छिदेण दोणेण मुत्तो वारणबाणो तुह उत्तस्स समुपचलिदो [२]।

विद्याधरः। [सम्यगवलोक्य] प्रयुक्तं वैनायकमस्त्रम्। पश्य पश्य।

सिन्दूरारुणमौलिभिः स्वदशनप्रोतान्बुदश्रेणिभि-
र्लीलोदस्तकराग्रमारुतभरप्रोद्धूततारागणैः।
पादाघातचलत्कुलक्षितिधरैः संकीर्णमालक्ष्यते
हैरम्बास्त्रविनिःसृतैर्मदमुखैः स्तम्बेरमैरम्बरम् [३]॥

इन्द्रः। ततस्ततः

विद्याधरः। पार्थेन सिंहास्त्रं प्रयुक्तम्। पश्य पश्य।

---

[१] सूर्य्योपकण्ठसदृशः अत्यन्तोर्द्धगताः। कुलगुरोः द्रोणस्य सारथेः उत्तरस्य च सन्तोषं जनयन्ति।

[२] एष साम्प्रतं दुर्य्योधनभर्त्सितेन द्रोणेन मुक्तो वारणवाणः तव पुत्रस्य समुपचलितः। स०

[३] लीलया उदस्तस्य उत्क्षिप्तस्य कराग्रस्य मारुतभरेण पवनातिशयेन प्रोद्धूताः प्रोत्क्षिप्ताः स्थानात्चालितास्तारागणाः यैः। कुलक्षितिधराः कुलपर्वताः। हेरम्बो देवतास्य हैरम्बम् गाणपत्यम्।

दंष्ट्राज्योतिःखचितगगनैः केसराटोपभीमैः
रुल्लाङ्गूलैः [१] क्षितिधरगुहामञ्चरद्धीरनादैः।
सिंहैरत्तैर्नखरशिखरात् खातकुम्भस्थलासृग्
धारास्वादव्यसनविवशैः क्वापि नीता गजेन्द्राः।

इन्द्रः। स्वल्पावशिष्टस्तर्हि जयः।

विद्याधरः। देव नन्न, निरवशिष्टश्च।

हत्वा शान्तनुनन्दनस्य तुरगान् सूतं कुरूणां गुरोः
कर्णस्यापि रथं विदार्य्य कणशः कृत्वा विसंज्ञं कृपम्।
छित्त्वा द्रोणसुतस्य कार्म्मुकलतां विद्राव्य चान्यद्बलं
त्वत्पुत्रो भवविदरत् कुरुपतेः पन्थानमन्वेत्ययम्॥

प्रतीहारी। अच्चाहिदं दुज्जोधणः स [२]।

विद्याधरः। नैव

विमुखे निपतति शस्त्रं संक्रन्दननन्दनस्य न हि जातु।
मणिमयमुकुटनिपातात् कोपाग्निस्तस्य कोपितः किञ्चित्॥

[ नेपथ्ये ]

भो भो राधेयमित्र!

---

[१] उल्लाङ्गूलैः उत्क्षिप्तलाङ्गूलैः धीरनादैः गभीरशब्दैः।

[२] अत्याहितं दुर्य्योधनस्य। स०

राजात्मजापरिभवक्षुभितः [१] प्रतिज्ञा-
मार्य्यस्तवोरुदलने यदि नाकरिष्यत्।
नूनं स्फुरन्मुकुटपाटनपाटवेन
तीक्ष्णः शरस्तव शिरोऽप्यहरिष्यदेव॥

प्रतीहारी। देव सुदं तुह उत्तस्स वअणं [२]।

इन्द्रः। [सविस्मयम्]

दैवानुकूल्ये किं नाम न शिवाय प्रकल्पते।
क्रुद्धभीमप्रतिज्ञापि ररक्ष कुरुभूपतिम्॥

विद्याधरः। देव! दुर्य्योधनमुकुटपाटनक्षुभितैः कर्णपुरस्सरैः कुरुभिः समन्ततो वेष्टितोऽर्जुनः।

इन्द्रः। [सशङ्कम्] ततस्ततः।

विद्याधरः। देव त्वत्पुत्रेण प्रस्वापनास्त्रं प्रयुक्तम्।

आमीलितेक्षणयुगं प्रथमं प्रसर्पन्-
निश्वासवातभरपूरितकण्ठघोषम्।
गण्डस्थलानिहितकार्मुककोटि सुप्तं
संलक्ष्यते कुरुबलं मृतकल्पमेतत्॥

[१] राजात्मजा द्रौपदी तस्याः परिभवेन सभायां वेशाम्बराकर्षणेन क्षुभितः संकोपितः। आर्य्यः ज्येष्ठ भीम इत्यर्थः।

[२] देव! श्रुतं तव पुत्रस्य वचनम्। स०

इन्द्रः। आयोधनश्रान्तानामुचितमेतत्। ततस्ततः।

विद्याधरः। एकं शान्तनवं हित्वा सर्व्वे विवसनाः कृताः।
प्रमृज्य लोचने पश्चात् प्रबुद्धाश्च पलायिताः॥

अपि च। निर्जित्य कौरवबलान्यथ वल्लवेभ्यो
गास्ताः समर्प्य मुदितैरभिनन्दितस्तैः।
प्रत्युद्गतः पुरजनैरथ धूलिजाल—
व्यालोलपक्ष्मनयनैरयमेति पार्थः॥

इन्द्रः। [आलोक्य] यद्द्रष्टव्यं तद्दृष्टम्।

---

[ततः प्रविशति रथारूढो नायकः सूतश्च।]

नायकः। सूतं विलोक्य कुमार!

न तथा मोदते चित्तं जित्वा कुरुपतिं रणे।
यथाऽक्षतशरीरेण त्वया मत्स्येन्द्रनन्दन!॥

सूतः। त्वयि रक्षितरि किं दुर्लभम्

इन्द्रः। [सरभसम्] दृष्टद्रष्टव्योऽस्म्यहम्।

[इति निष्क्रान्तः]

---

नायकः। [सतोषम्] सूत।

दुःशासनो यदकरोत् कुरुसन्निधाने
पञ्चालराजतनयां प्रसहन् विवस्त्राम्।

तस्मात्कृतं प्रतिकृतं हरता मयाद्य
निद्रागकौरवबलस्य रणेऽंशुकानि ॥

सूतः। सर्वमेतत्प्रतिकृतम् तावच्च।

संग्राममरणं नाम क्षतदुःखं सुखोत्तरम्।
आजन्म हृदये शल्यं मानभङ्गो हि मानिनाम्॥

नायकः। [पुरोऽवलोक्य] अये सोपकरणानुज आर्य्य, आर्य्यश्च विराट इत एवागच्छति।

[ततः प्रविशन्ति यथानिर्दिष्टा युधिष्ठिरभीमनकुल सहदेवाः सपरिवारो विराटश्च]

युधिष्ठिरः। मत्स्यराज! पश्य पश्य।

रथतुरगरजोभिर्धूसरभ्रूस्मश्रुजालं
श्रमजलकणिकाभिर्भासुराभिः परीतम्।
श्रममसमरकर्म्माक्रान्तमप्यस्य वक्त्रं
जयति विजयलक्ष्मीसङ्गसम्पत्सुशोभम्॥

विराटः। शोभन्ते विद्यया विप्राः, क्षत्रिया विजयश्रिया।
श्रियोऽनुकूलदानेन, लज्जया कुलपालिकाः [१]॥

नायकः। [ससम्भ्रमम्] अये कथमार्य्यः [रथादवतीर्य्य यथोचितमभिवादयते]

[१] कुलपालिकाः कुलस्त्रियः।

सर्व्व। [अभिनन्दन्ति]

एकोऽहरद्रिपुपुराणि हरः, खरादीन्
एकश्च दण्डकवने न्यवधीत् स रामः।
एकोऽधुना कुरुबलानि भवानजैषीत्
नाश्रावि नैक्षि च पुनः पुरुषश्चतुर्थः [१]॥

नायकः। स खलु युष्माकं प्रसादः।

विराटः। [नेपथ्याभिमुखमवलोक्य] राजपुत्र पश्य पश्य।

वत्सालोकप्रस्नुतापीनभाजः[२]
सिञ्चन्त्यः क्ष्मां क्षीरधाराच्छलेन।
चन्द्रालोकस्पर्द्धिनीं धेनवस्ते
कीर्त्तिं मूर्त्तां नूनमेताः सृजन्ति॥

[अर्ज्जुनं सम्बोध्य]

मत्येभभं यो द्रुपदात्मजाया-
श्चकर्ष केशान् धृतराष्ट्रपुत्रः।
निर्य्यात्यमेतन्मुकुटं निपात्य
निर्य्यातितं तस्य सुयोधनस्य॥

[१] यत्त्रयो वह्ननि जितवान् तादृशस्तुर्थः एतेषां प्रागुक्तानां त्रयानां पूरणं न श्रुतः नापि दृष्ट इत्यर्थः।

[२] वत्सालोकनेन तद्दर्शनेन प्रस्नुतं यदापीनम् उधः तद्भाजः।

[तत श्रुत्वा भीमः [सामर्षम्] भो भो राजन्नैतत् प्रतिज्ञा भवति किन्तु

दुःशासनस्य गदया प्रविदार्य्य वक्षः
सद्यः कदुष्णरुधिराणि ततो निपीय।
तच्छोणिताम्बुलुलितां सुनियम्य देव्या
वेणीं तु तत् प्रतिकरिष्यति भीम एव॥

युधिष्ठिरः। वत्स किमसाध्यं त्वया।

लीलोन्मूलितकौवेरसौगन्धिकवनश्रियः।
लीलाहतहिडिम्बस्य विक्रमं ते कगाद्वि कः॥

भीमः। श्रुत्वा सानुनयम्। प्रणोत्वार्य्यः न क्षमेऽहम्।

युधिष्ठिरः। अतीतः कालः क्षमाया आसन्नश्च कालो विक्रमस्य। अलमनुनयेन।

विराटः। युधिष्ठिरं प्रति।

अज्ञानतोनियुक्तस्य यदयोग्येषु कर्मसु।
क्षन्तव्यं तन्महाभाग! नाज्ञातमपराध्यति॥

नायकः। राजन्नुपकार एवायं नापकारः।

यदि कर्म स्वयोग्येषु त्वमस्मान्न न्ययोक्ष्यथाः।
अज्ञातवासं राजायं नाकरिष्यत् महाभुजैः॥

विराटः । नायकं प्रति राजपुत्र !

सख्यं साप्तपदीनं यत् सोढव्यः प्रणयो मम ।
अतस्त्वामर्थये किञ्चिदुत्तरा मे स्नुषास्तु ते ॥

नायकः । यद्रोचते भवते ।

स्वयमायान्तीं गेहे लक्ष्मीं को ना [१] विमन्यते मूढः ।
दैवानुकूलता सा यदयाचितमाप्यतेऽभीष्टम् ॥

विराटः । किन्ते भूयः प्रियमुपकरोमि ।

नायकः ।

निस्तीर्णोऽज्ञातवासो रणभुवि विजिताधार्त्तराष्ट्राः सकर्णाः
स्त्रीरत्नं त्वत्तनूजा समजनि तनयस्याभिमन्योः कलत्रम् ।
गावः प्रत्याहृतास्ताः सुहृदपि परमस्त्वं च नः श्लाघनीयः
तस्मान्नैव किञ्चित् सुचिरमवदृश्यन् यन्मया प्रार्थनीयम् ॥

तथापीदमस्तु ।

सौजन्याम्बुतसिन्धवः परहितप्रारम्भवीरव्रता
वाचालाः परवर्णने निजगुणालापे च मौनव्रताः ।
आपत्स्वप्यविलुप्तधैर्य्यनिचयाः सम्पत्स्वनुत्सेकिनो
मा भूवन् खलवक्त्रनिर्गतविषम्लानाननाः सज्जनाः [२] ॥

[१] ना पुमान् को मूढः विमन्यते अवजानाति ।

[२] सौजन्यरूपजलस्य सिन्धव इवाधराः निजगुणालापे अमुख-

अपि च। सारस्वतं स्फुरतु चेतसि सत्कवीनां

चक्षुर्भवन्तु कृतिनो गतमत्सराश्च।

भूपाश्च सन्तु कविसूक्तिषु सानुरागाः

संत्यज्य मण्डलकविप्रणयानुरागम् [१]॥

विराटः। तथास्तु इति निष्क्रान्ताः सर्व्वे॥

इति श्रीकाञ्चनाचार्य्यविरचितो धनञ्जयविजयोनाम

व्यायोगः समाप्तः।

---

कथने मौनव्रताः अवाग्व्यापाराः। परवर्णने वाचालाः वाग्मिनः अनुत्सेकिनः अगर्वाः।

[१] मण्डलकविः ग्राम्यकाव्यरचयिता तस्य प्रणयः प्रणयन तत्कृतिरित्यर्थः तत्रानुरागं संत्यज्य विहाय कवीनां सूक्तिषु दोष-रहितकाव्येषु सानुरागाः सन्तु।

इति श्रीतारानाथ तर्कवाचस्पति विरचितम् धनञ्जयविजय

व्याख्यानम् समाप्तम्।

शुभमस्तु।